**उत्पश्यामि त्वयि तटगते स्निग्धभिन्नाञ्जनाभे .....** ॥५९॥

त्वयि शिखरस्थिते सति तस्य कैलासस्यानिमिषलोचनदृश्यां भाविनीं शोभामुप्रेक्षेऽहम् । तस्य कस्येव? अंसन्यस्ते स्कन्धप्रावृते मेचके कृष्णे वस्त्रे हलधरस्येव। मेघस्य कालत्वात् । स्निग्धभिन्नाञ्जनाभेऽरूक्षपिष्टकज्जलनिभ इति मेघविशेषणम् । तस्य तु तत्क्षणच्छिन्नदन्तिदन्तखण्डवलक्षस्य । गौरोऽपि शुभ्रः । ॥५९॥

**हित्वा नीलं भुजगवलयं शंभुना दत्तहस्ता .....** ॥६०॥

तस्मिंश्च केलिपर्वते कैलासे शिवेनालम्बितकरा पार्वती यदि पादचारेण चरणाभ्यां विहरेच्चङ्क्रम्येत तदस्यास्त्वमारोहणेषु सोपानत्वं कुर्याः । यतो भङ्गी भक्त्या तरंगविच्छित्त्या कल्लोलाकारेण विरचितदेहः । अत एव तत्सुखपदस्पर्शं पारुष्याभावाच्छीतलत्वाच्च चरणप्रीतिकारि । स्तम्भितं निश्चलो कृतमन्तरुदरे जलं येन । अन्यथा हि पादसादः स्यात् । भयंकरत्वादेव नीलं सर्पकटकं हित्वा त्यक्त्वा। पादाभ्यां चारी गमनं पादचारः ॥६०॥

**तत्रावश्यं जनितसलिलोद्गारमन्तःप्रवेशान् .....** ॥६१॥

तत्राद्रौ जनितसलिलोद्गारं वर्षन्तं त्वामभ्यन्तरप्रवेशान्निश्चितं त्रिदशवनिता नाकयुवत्यो यन्त्रधारागृहत्वं नेष्यन्ति प्रापयिष्यन्ति । यदि किलानिलवशाद्देश्ममध्ये निक्षिप्ती विरलं वर्षसि तदा त्वमेव यन्त्रधारामयं गृहं संपद्यसे । ग्रीष्मे हि संतापनिवारणायाढ्या धारागृहान्कुर्वते । एवं सति घर्मे लब्धस्य तव ताभ्यः सकाशात्केलिलम्पटाभ्यो यदि त्यागो मोक्षो न स्यात्तत्कर्णकटुकैर्गर्जितैस्ता भाययेस्त्रासयेः। यथोद्विज्य त्वां मुञ्चेयुरिति भावः । उद्गारः प्रसरः । ॥६१॥

**हेमाम्भोजप्रसवि सलिलं मानसस्याददानः .....** ॥६२॥

छायया प्रतिबिम्बेन भिन्नो द्विधाभूतस्त्वं सितमणिनिर्मलं तं पर्वतं निर्विशेरुपभुञ्जीथाः । उपभोगमाह । कीदृशास्त्वम्? हेमाम्भोजानि सुवर्णपद्मानि प्रसूते जनयति यत्तदुदकं मानससंबन्ध्याददानो गृह्णन् । प्रसवोऽत्र गौणः । तथा कामात्स्वेच्छात एवैरावणस्य क्षणं मुखपटप्रीतिं कुर्वन् । गजा हि मुखपटेन प्रीयन्ते । सजलपृषतैस्तोयकणयुक्तैरनिलैः सुरतरुवासांसि धुन्वन्दोलयन् । धुनोतेः सौवादिकस्य ह्रस्वान्तस्याभ्युपगमाद्धुन्वन्निति रूपम् । ॥६२॥

**तस्योत्सङ्गे प्रणयिन इव स्रस्तगङ्गादुगूलां .....** ॥६३॥

तत्र कैलासे दृष्ट्वास्मत्पुरीमलकां न न ज्ञास्यसे । अपि तु निःसंदेहं

वेत्स्यस्येव यथा नूनमियं सालकेति । यतस्तस्याद्रेरुत्सङ्गेऽङ्के स्रस्तं भ्रष्टं गङ्गैव दुगूलमम्बरं यस्यास्ताम् । जाह्नवी हि तत्र वहति । या चालका वः काले युष्माकं समये वर्षाख्येऽभ्रवृन्दं वहति । कीदृशम्? सलिलमुद्गिरति स्रवतीति सलिलोद्गारम् । कर्मण्यण् (३-२-१)। का यथा कीदृशं किं वहतीत्याह । मुक्ताजालालंकृतमलकं यथा कामिनी बिभर्ति । सापि प्रियस्योत्सङ्गे स्रस्तदुकूला भवति । सलिलस्य मुक्ताजालमुपमानम् । अभ्राणां ललाटकेशाः । उच्चैर्विमाना प्रांशुगृहा । कामचारिन्निति मेघस्य जडत्वं निराकृतम् । ।।६३।।

**विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः ..... ।।६४।।**

यत्रालकायां प्रासादा गृहास्तैरुच्यमानैर्धर्मैर्भवन्तं तुलयितुमलमनुकर्तुं शक्ताः। तथा हि त्वां विद्युत्वन्तं सतडित्कं तेऽपि ललितवनिताः सविलासाङ्गनाः । त्वां सेन्द्रचापं ससुरायुधं तेऽपि सचित्राः सालेख्याः । त्वां स्निग्धगंम्भीरघोषं मधुरधीरध्वनितं तेऽपि संगीताय गुणनिकार्थं प्रहतमुरजा वादितमृदङ्गाः । त्वामन्तस्तोयं तेऽपि मणिमयभुवः स्फाटिकावनयः । त्वां तुङ्गमुन्नतं तेऽत्यभ्रंलिहाग्रा व्योमस्पृक्शिखराः । एवं सर्वसादृश्यम् । अभ्रं खं लेढि व्याप्नोतीत्यभ्रंलिहमग्रं येषाम् । वहाभ्रे लिहः (३-२-३२)। तुलिरदन्तोऽपि । ।।६४।।

**हस्ते लीलाकमलमलकं बालकुन्दानुविद्धं ..... ।।६५।।**

यत्र चाङ्गनानामिदमिदमृतुषट्कजातमग्राम्यमाभरणम् । किं किमित्याह । करे लीलाकमलं विलासनलिनम् । अलकं बालैः कुन्दकुसुमैरनुविद्धं संमिश्रम् । मुखलक्ष्मीरपि रोध्रपुष्पपरागेण पाण्डुतां गौरत्वं प्रापिता । चूडापाशे नवं सरसं कुरवककुसुमम् । कर्णयो रम्यं शिरीषकुसुमम् । सीमन्ते च त्वदुपगमजं प्रावृषेण्यं नीपपुष्पम् । तद्धि वर्षासु जायते । तदेतेन तथाभूतेन कनकालंकारनिरासेन नागरत्वमङ्गनानामुक्तम् । ।।६५।।

**यस्यां यक्षाः सितमणिमयान्येत्य हर्म्यस्थलानि ..... ।।६६।।**

यस्यामलकायां नित्यं वरपुरंध्रिसहिता गुह्यकेश्वराः सौधतलान्यागत्य रतिफलं न तु कलहादिजनकं कल्पवृक्षजं मधु रसं सेवन्ते । कीदृशानि स्थलानि । सितमणिमयानि स्फटिकानि । अत एव ज्योतिश्छायास्तारावलिप्रतिबिम्बान्येव कुसुमरचना पुष्पप्रकरो येषु । कदा सेवन्ते? भवत इव गम्भीरो निर्ह्रादी ध्वनिर्येषां तेषु पुष्करेषु वाद्यमुखेष्वाहतेष्वास्फालितेषु सत्सु । तदेतेन दंपतीनां सदासुखितत्वमुक्तम् । ।।६६।।

**यत्र स्त्रीणां प्रियतमभुजालिङ्गनोच्छ्वासितानाम्.....** ॥६७॥

यत्र पुर्यां स्त्रीणां कामिनीनां सुरतजनितामङ्गग्लानिं चन्द्रकान्तमणयो व्यालुम्पन्ति प्रशमयन्ति। कीदृशीनाम्? प्रियतमभुजालिङ्गनोच्छ्वासितानां भर्तृभुजबन्धनपीडितानाम् । कीदृशाश्चन्द्रकान्ताः? तन्तुजालेष्ववलम्बन्त इति तन्तुजालावलम्बाः । तथा त्वत्संरोधापगमविशदैर्भवदावरणनिवृत्तिनिर्मलैश्चन्द्रपादैः शशिकिरणैश्चेतिताः स्राविताः । अत एव स्फुटजललवस्यन्दिनः प्रकटतोयकणमुचः। अतश्चाङ्गग्लानिहरत्वम् । ॥६७॥

**नेत्रा नीताः सततगतिना यद्विमानाग्रभूमी .....** ॥६८॥

यत्र भवद्विधा मेघाश्चित्रेषु नवजलकणैर्नाशं विधाय जर्जरत्वाद्धूमोद्गारानुकृत्या धूमप्रसरसादृश्येन निपुणं प्रवीणं प्रासादजालैर्गवाक्षविवरैर्निष्पतन्ति निर्यान्ति । उत्प्रेक्षते। चित्रनाशेन शङ्कास्पृष्टा इव शङ्किता यथा । साशङ्कैर्हि सापराधत्वाद्व्याजेन पलाय्यते । कीदृशा जलदाः? यस्यामलकायां विमानाग्रभूमीर्नेत्रा वोढ्रा प्रेरकेण सततगतिना वायुना नीता अपवाहिताः । नयतीति नेता तेन । अतश्च वर्षणादालेख्यबाधः । जर्जराः खण्डा म्लानाः । ॥६८॥

**नीवीबन्धोच्छ्वसनशिथिलं यत्र यक्षाङ्गनानां .....** ॥६९॥

यत्र यक्षाङ्गनानां चन्दनादिचूर्णमुष्टिर्दीपशान्तिधिया प्रेरितो विफलो भवति निष्फलः संपद्यते । प्रद्योतकाप्रशमात् । कदाचिदन्यत्रासौ पतितो भवेदित्याह । अर्चिस्तुङ्गान्महाज्वालानूरत्नप्रदीपानभिमुखमासाद्यापि । विफलत्वं त्वनश्वरत्वाद्रत्नार्चिषः। क्षेपस्तु वह्निदीपभ्रान्त्या । कदा विफलः? इत्याह । कामात्सुरतेच्छया चपलपाणिषु प्रियेष्वम्बरमपहरत्सु । कीदृशं वासः । नीवीबन्धस्योच्चयसंयमनस्योच्छ्वासनेन विकासेन शिथिलमदृढम् । ततश्चापलात्तदपहारः । अतश्च लज्जाव्याकुलत्वात्तासां चूर्णादिभिर्मणि-दीपप्रशमनेच्छा । ॥६९॥

**गत्युत्कम्पादलकपतितैर्यत्र मन्दारपुष्पैः .....** ॥७०॥

यत्राभिसारिकाणां नैशो मार्गः प्रभातेऽमीभिः सूच्यते कथ्यतेऽनुमीयते वा। कैः? स्तनजघनभरेण गत्युत्कम्पात्केशच्युतैर्मन्दारकुसुमैः । कर्णभ्रष्टैश्च कनकनलिनैः क्लृप्तच्छेद्यै रचितविच्छित्तिविशेषैः । तथा मुक्तामणिषु लग्नः स्तनपरिमलः कुचामोदो येषां तैश्छिन्नसूत्रैर्मुक्ताहारैश्च । तदेतेन भ्रष्टाभरणाग्रहणेन समृद्धिरुक्ता । छेदनीयं छेद्यं पत्त्रलतादि । क्लृप्तशब्दे कृपो रो लः (८-२-१८)। ॥७०॥

**मत्वा देवं धनपतिसखं यत्र साक्षाद्वसन्तं ..... ॥७१॥**

यत्र पुर्यां साक्षादासीनं हरमवेत्य स्मरः षट्पदज्यं षट्पदमौर्वीकं धनुः प्रायेण त्रासान्नादत्ते । स्वव्यापारान्न कुरुत इत्यर्थः । कथं तर्हि मिथुनेष्वन्योन्यं प्रेमेत्याह । तस्य कामचापस्यारम्भो व्यापारः प्रवीणाङ्गनाविलासैरेव संपद्यते । कीदृशैः। कामिलक्ष्येषु सभ्रूभङ्गानि प्रहितानि क्षिप्तानि नयनानि येषु । तथामोघैरवन्ध्यैः कार्यकारिभिः । तदेतेन युवतिप्रावीण्यमुक्तम् । ॥७१॥

**तत्रागारं धनपतिगृहानुत्तरेणास्मदीयं ..... ॥७२॥**

तत्रेवंविधायामलकायां धनपतिगृहानुत्तरेण राजराजवेश्मान्युत्तरेण तदस्माकमगारं गृहम् । अभिज्ञानान्याह । शक्रचापरम्येण तोरणेन दूरादपि दृश्यम् । यस्य चोपान्ते निकटे बालो मन्दारवृक्षोऽस्ति । कीदृशः? मदीयया प्रियया सेकादिना पोषितः । यतः कृतकतनयः पुत्रीकृतः । बालत्वाच्च करग्राह्यैर्गुच्छैर्नम्रीभूतः । उत्तरेणेत्येनबन्तः (५-३-३५)। तद्योगे च गृहानित्येनपा द्वितीया (२-३-३१)। पञ्चम्यन्तः पाठस्त्वनार्यः

**वापी चास्मिन्मरकतशिलाबद्धसोपानमार्गा ..... ॥७३॥**

अस्मिन्नस्मद्गृहे वापी पद्मिनी विद्यते । कीदृशी? मरकतमणिशिलाभिर्बद्धो रचितः सौपानमार्गो यस्याः । तथा स्निग्धैर्वैडूर्यमणिभिरेव नालो दण्डो येषां तैर्हैमैः सौवर्णैः पद्ममुकुलैः स्यूता प्रोता संबद्धा । वाप्यां हि पद्मैर्भाव्यम् । यस्याश्च तोये कृतवसतयो हंसास्त्वामपि प्रेक्ष्य वर्षासमयेऽपि निकटमपि मानसं सरो न ध्यास्यन्ति न स्मरिष्यन्ति । यतो व्यपगतशुचः । तत्रैवोपद्रवाभावान्निर्दुःखाः । हेमशब्दो रजतादिः (४-२-१५४)। ॥७३॥

**यस्यास्तीरे निचितशिखरः पेशलैरिन्द्रनीलैः ..... ॥७४॥**

यस्या वाप्यास्तीर एवंविधः क्रीडाशैलोऽस्ति । कीदृशः । पेशलैर्मनोज्ञैरिन्द्रनीलमणिभिर्निचितशिखरो बद्धशृङ्गः । कनकमयीनां च कदलीलतानां वेष्टनेन परिवलनेन प्रेक्षणीयो रम्यः । अतश्च मत्प्रियायाः कान्त इति निकटोल्लसितशतह्रदं भवन्तमालोक्य सादृश्यात्तमेवाद्रिं कातरेणाधीरेण मनसा स्मरामि । सादृश्यात्प्रियत्वाच्च स्मरणम् । कातरत्वं तु विरहवशात् । शेषत्वाविवक्षया तमित्यधीगर्थेति (२-३-५२) षष्ठ्यभावः। ॥७४॥

**रक्ताशोकश्चलकिसलयः केसरश्चात्र कान्तः ..... ॥७५॥**

अत्र केलिपर्वते रक्ताशोककेसरतरू पल्लवितौ स्तः । कुरवकवृक्षैर्वृतिर्वर्णिका

कण्ठी यस्य तस्य माधवीलतामण्डपस्य प्रत्यासन्नौ सविधौ । ययोश्चैकोऽशोकस्तव सख्या मद्गेहिन्या वामपादाभिलाषी । चरणप्रहारानुग्रहेण तस्य विकासात् । मया सह। अहमपि सापराधस्तदीयं पादप्रहारमभिलषामीत्यर्थः । अपरो बकुलो दोहदच्छद्मना सेकाभिलाषव्याजेनास्या मत्प्रेयस्या वदनमदिरां काङ्क्षति । तरुणीमुखासवसेकेन तस्य विकासात् । मया सह । अहमपि तदीयां वदनमदिरां काङ्क्षामीत्यर्थः । अशोकादीनां प्रशस्तत्वादुपादानम् । ॥७५॥

**तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टिः ..... ॥७६॥**

तयोरशोककेसरयोर्मध्ये क्रीडाबर्हिणः सौवर्णो वासार्थं यष्टिर्दण्डोऽस्ति । कीदृशी? स्फटिकमयं फलकं पीठं यस्याः सा । मूलभागे च मणिभिर्नद्धा संबद्धा। कैः? अनतिप्रौढा नातिपक्का ये वंशा वेणवस्तद्वत्प्रकाशैर्द्योतमानैस्तत्सवर्णैः। मरकतैरित्यर्थः। ते हि वंशवर्णाः । यां च यष्टिं दिनान्ते युष्माकं सुहृन्नीलकण्ठो मयूरोऽध्यास्ते श्रयते । कीदृशः मत्कान्तया शिञ्जानकनककटकमनोहरैस्तालैर्वाद्यैर्नर्तितः। शिञ्जेरात्मने पदित्वाच्छिञ्जदिति प्रयोगः प्रमादजः। अनित्यो वानुदात्तेदात्मनेपदविधिः (१-३-१२)। ॥७६॥

**एभिः साधो हृदयनिहितैर्लक्षणैर्लक्षणीयं ..... ॥७७॥**

हे साधो! पूर्वोक्तैरेतैश्चिह्नैश्चित्तस्थापितैर्मद्वेश्म त्वया लक्षणीयं बोद्धव्यम् । किं च द्वारपार्श्वे शङ्खपद्मौ निधी लिखितवपुषौ दृष्ट्वा लक्ष्यम् । कीदृशम्? इदानीं मद्विरहेण क्षामच्छायं कृशशोभम् । यस्माद्रवेरस्तमये नलिनं नैव निजां श्रियं पुष्णाति वर्धयति । ॥७७॥

**गत्वा सद्यः कलभतनुतां शीघ्रसंपातहेतोः ..... ॥७८॥**

ततस्त्वं पूर्वोक्ते रम्यसानौ क्रीडाद्राववस्थितः सन्नस्मद्वेश्माभ्यन्तरपतितां विद्युदुन्मेषदृष्टिं तडिदुद्योतनमेव दृशं कर्तुमर्हसि । यथा तां पश्यसीति भावः । किं कृत्वा? तत्क्षणं कलभतनुतामिभशिशुपेलवत्वं क्षिप्रगमनार्थं प्राप्य । महति हि देहे व्यथा जायते । कीदृशीं दृष्टिम् । अल्पाल्पा कृशप्राया भाः कान्तिर्यस्यास्ताम् । अत एव च खद्योताल्या ज्योतिर्मालिश्रेण्या यद्विलसितं स्फुरणं तत्सदृशीम् ॥७८॥

**तन्वी श्यामा शिखरदशना पक्वबिम्बाधरौष्ठी ..... ॥७९॥**

**तां जानीयाः परिमितकथां जीवितं मे द्वितीयं .... ॥८०॥**

तत्र वेश्मनि यैवंविधाङ्गना भवेत्तां त्वं मम जीवितं द्वितीयं बहिश्चरं जानीयाः।

मद्भार्यां बुध्येथाः । कीदृशी? या तन्वी कृशाङ्गी । श्यामैकवारप्रसूता । तरुणीत्यर्थः। शिखरदशना तीक्ष्णदन्ता । पक्वं यद्बिम्बफलं तद्वदधरो यस्याः सा । मध्ये क्षामा कृशोदरी । चकितहरिणप्रेक्षणी त्रस्तकुरङ्गनयना । निम्ननाभिरतुन्दिला । श्रोणीभारान्नितम्बभारादलसगसना मन्थरयाना । स्तनाभोगेन च स्तोकं मनाङ्नम्रा नता । किं बहुना? युवतिविषये नारीमध्ये वेधस आद्या सृष्टिरिव । आदौ ह्यनुद्वेगाद्रम्यं निर्माणं भवति । तां कीदृशीम्? परिमितकथां पेशलसाषिणीम् । मयि सहचरे पत्यौ दूरीभूते दूरस्थिते सति चक्रवाकीमिवैकां केवलाम् । यां च बालाममीषु गाढोत्कण्ठादुःसहेष्वहःसु व्रजत्सु शिशिरदग्धां कमलिनीमिव विरूपां संपन्नां मन्ये जाने । वाशब्द इवार्थे । तां जानीया इत्येतदपेक्षयात्र सर्वत्र द्वितीया । ॥७९॥८०॥

**नूनं तस्याः प्रबलरुदितोच्छूननेत्रं बहूनां ..... ॥८१॥**

तस्या वक्त्रं निश्चितं त्वदुपसरणक्लिष्टकान्तेर्भवत्संपर्ककदर्थितशोभस्य शशिनो दैन्यं बिभर्ति विच्छायतां धत्ते । यतोऽसकलव्यक्ति न तथा प्रकटम् । कुतः? लम्बालकत्वात् । न हि विरहिणी केशान्संमार्जयति । कीदृशं तत्? प्रबलेनाविच्छिन्नेन रुदितेनोच्छूने नेत्रे यस्य । तथा श्वासपरंपराया उष्णत्वाद्भिन्नवर्णो नष्टकान्तिरधरो यस्य । हस्तन्यस्तं करविधृतम् । ॥८१॥

**आलोके ते निपतति पुरा सा बलिव्याकुला वा ..... ॥८२॥**

मत्प्रियैवंविधा तवालोके दर्शनपथे पुरा निपतत्यचिराद्यास्यते । एवंविधान्व्यापारान्कुर्वती तां द्रक्ष्यसीत्यर्थः । कीदृशी? बलिव्याकुला देवपूजातत्परा । मम सादृश्यमनुकारं विरहवशात्तनु दुर्बलं भावगम्यं चित्तस्थितं लिखन्ती वा । मञ्जुवादिनीं शारिकां पञ्जरस्थां पृच्छन्ती वा । किमित्याह । हे निभृते विनीते कच्चिद्भर्तुः स्मरसि मत्पतिं ध्यायसि । यस्मात्त्वं तस्यातीव प्रिया । पुरा निपततीति यावत्पुरानिपातयोर्लट् (३-३-४)। ॥८२॥

**उत्सङ्गे वा मलिनवसने सोम्य निक्षिप्य वीणां ..... ॥८३॥**

धूसराम्बरेऽङ्के वीणां निधाय गेयमुद्गातुकामा वा । सालोके ते निपततीति संबन्धः । कीदृशं गेयम्? मम गोत्रं नामाङ्कश्चिह्नं यस्य । विरचितानि पदानि शब्दा यस्य । पदस्थो हि स्वरसंघातो गेयम् । मदीयनामान्वितमित्यर्थः । अस्रुभिर्नेत्रजलैरार्द्राः क्रूरास्तन्त्रीः क्लेशेन सारयित्वा योजयित्वा स्वयमपि दत्तां मूर्छनां सारणां विस्मरन्ती। चेतसोऽस्वास्थ्यात् । ॥८३॥

**शेषान्मासान्गमनदिवसप्रस्तुतस्यावधेर्वा .....** ॥८४॥

गमनदिवसात्प्रवृत्तो योऽवधिर्वर्षाख्यस्तस्य शेषान्मासानवनौ भुवि विन्यस्यन्ती स्थापयन्ती । कैः? देहल्यां द्वारविशेषे द्वारपूजार्थं दत्तैः पुष्पैर्या गणना तया । रेखापदेषु पुष्पाणि दत्त्वेत्यर्थः । हृदयनिहितारम्भं मनोरथरचितं मत्संगमं वास्वादयन्त्यनुभवन्ती । कथमवगच्छस्येतादृशान्व्यापारन्कुर्वतीत्याह । यस्मादिष्टवियोगे विरहिणीनां प्रायेणैवंविधा एव विनोदाः केलयो भवन्ति । ॥८४॥

**आद्ये बद्धा विरहदिवसे या शिखादाम हित्वा .....** ॥८५॥

**सव्यापारामहनि न तथा खेदयेद्विप्रयोगः .....** ॥८६॥

तां सखीमुन्निद्रां सतीं त्वमतः कारणन्निशीथेऽर्धरात्रे मत्संदेशैः सुखयितुं पश्येर्न तु दिवसे । कुत इत्याह । सव्यापारत्वादहनि तां विरहो न तथा दुःखयेद्यथा रात्रौ शङ्के संभावये । यतो निर्विनोदां चित्रव्यापारदिवर्जिताम् । अत एव गुरुतरशुचमति-दुःखिताम् । कीदृशीं ताम्? एवंविधामेकां वेणीं कठोरपरुषात्कपोलफलकादघटित-करजेन पाणिना सारयन्तीमालोकार्थमपास्यन्तीम् । कीदृशीं वेणीम्? याद्ये प्रथमे विरहदिवसे वियोगदिने चूडाशेखरमपास्य तया वेष्टिता । या च नष्टशोकेन मया मोचनीया । एवं ह्येष विरहाचारः । स्नेहाभावाच्च स्पर्शे क्लिष्टां परुषाम् । त्वं कीदृशः? अवनौ भुवि न तु खट्वायां यच्छयनं तल्पं तस्यासन्ने निकटे वातायने गवाक्षे तिष्ठति यः स तथोक्तः । ॥८५॥८६॥

**आधिक्षामां विरहशयने संनिकीर्णैकपार्श्वां .....** ॥८७॥

अन्यच्च कीदृशीं ताम् । आधिक्षामां चित्तपीडाकृशाम् । अत एव यादृशे तादृशे विरहशयने संनिकीर्णं क्षिप्तमेकं पार्श्वं यया । अतश्चामावस्यायां प्राचीमूले पूर्वदिङ्मुखे कलामात्रशेषां हिमांशोश्चन्द्रमसो मूर्तिमिवेत्युपमा । तथा निद्रामभिलषन्तीम्। किमर्थम्? मया सह कथं नाम स्वप्ने ममागमो घटेतेति । नयनसलिलोत्पीडेन नेत्राम्बुपूरेण रुद्धावकाशां निवृत्तप्रसराम् । ॥८७॥

**निःश्वासेनाधरकिसलयक्लेशिना विक्षिपन्तीं .....** ॥८८॥

दीर्घोष्णत्वादोष्ठपल्लवदाहिनोच्छ्वासेनालकं नूनमुत्क्षिपन्तीमपास्यन्तीम् । कीदृशम्? शुद्धस्नानात्पानीयमात्राभिषेकेण परुषं रूक्षम् । यदि हि सा मङ्गलार्थं कदाचित्स्नाति तत्सुरभितैलामलकादिशून्येन तोयमात्रेण । आगण्डं लम्बत इत्यागण्डलम्बं कपोलस्रस्तम् । तथा मया महेच्छारतैर्या निशा क्षणवदतिवाहिता तामेवोष्णैर्बाष्पैर्विरहशय्यायां रोदनेन मासमिव यापयन्तीं नयन्तीम् । ॥८८॥

**पादानिन्दोरमृतशिशिराञ्जालमर्गप्रविष्टान् .....** ॥८९॥

सबाष्पत्वाद्गुरुभिर्दुःसहैः पक्ष्मभिर्लोमभिः खेदाच्चक्षुराच्छादयन्तीं स्थगयन्तीम्। कीदृशम्? पीयूषशीतलान्वातायनप्रविष्टानिन्दोः पादान्किरणान्पूर्वप्रीत्या संमुखं गतं प्रसृतम् । ततो मद्विरहेण खेदकारित्वात्तथैव संनिवृत्तम् । यद्वदेव रभसाद्गतं तद्वदेव प्रत्यागतमित्यर्थः । अतश्चाक्ष्णोः स्थगनान्न प्रबुद्धां न सुप्ताम् । नेत्रनिमीलनान्नबोधाभावो निद्राभावश्च स्वापशून्यतया । अतश्च साभ्रेऽहनि स्थलकमलिनीमिवेत्युपमा। सा हि साभ्रत्वान्न प्रबुद्धा दिनवशाच्च न सुप्ता । पूर्वैवात्र वाक्यत्रये क्रिया ॥८९॥

**जाने सख्यास्तव मयि मनः संभृतस्नेहमस्मा .....** ॥९०॥

तस्या भवद्वयस्याया यतो मयि मनः संभृतस्नेहमतिप्रीतिमदतः कारणादित्थंभूतामेवंविधां दशामवाप्तां तामहमाद्यवियोगे तर्कयाम्युत्प्रेक्षे । न च स्नेह एव त्वयि तस्या नास्तीति वक्तुं युज्यत इत्याह । सुभगमिष्टमात्मानं मन्यते सुभगंमन्यः । तद्भावो मां नैव वाचालं यत्किंचनभाषिणं कुरुते । तस्माद्यत्तव मयोक्तमेतदशेषं तवाचिरात्प्रत्यक्षम् । अवश्यं त्वमेवंविधां तां द्वित्रैर्दिनैर्द्रक्ष्यसीत्यर्थः। ॥९०॥

**सा संन्यस्ताभरणमबला पेलवं धारयन्ती .....** ॥९१॥

सा बला कृशाङ्गी कृशं देहं वहन्ती निश्चेतनमपि त्वां नवजलमयमस्रमवश्यं त्याजयिष्यति । कीदृशं गात्रम्? पेलवं कृशं सुकुमारम् । अत एव संन्यस्ताभरणं त्यक्तमण्डनम् । तथा तल्पपृष्ठे निक्षिप्तमप्यतिक्लेशेन बिभ्रती । यद्येवंविधा सा किमित्यहं रोदिमीत्याह । यस्माद्य आर्द्रान्तरात्मा सरसचित्तः स सर्वः प्रायेण करुणावृत्तिः कृपाशीलो भवति । त्वं च सजलत्वादार्द्रान्तरः । करुणा कृपैव वृत्तिर्व्यापारो यस्य स करुणावृत्तिः । कृपार्थवृत्तेः करुणाशब्दस्य भाषितपुंस्कत्वाभावान्न पुंवद्भावः (६-३-३४)। दुःखदुःखे-नेत्याधिक्ये द्विर्वचनम् । दुहेरिव मुचेरपि द्विकर्मकत्वात्त्वामस्रं मोचयिष्यतीति ॥९१॥

**रुद्धापाङ्गप्रसरमलकैरञ्जनस्नेहशून्यं .....** ॥९२॥

भवति निकटस्थे सति तस्या हरिणनयनाया नेत्रमुपरिस्पन्दित्वादनिमेषोत्फलनचटुलोत्पलशोभासाम्यं प्राप्स्यतीत्याशङ्के संभावयामीति शुभसूचनमत्र । स्त्रीणां हि वामाक्षिस्फुरणमानन्दमासन्नमाह । कीदृशं नयनम्? लम्बैरलकै रुद्धापाङ्गप्रसरं निवृत्तकटाक्षक्षेपम् । शोकाद्याञ्जनस्नेहेन रहितम् । तथा मद्यस्य वर्जनाद्विस्खलितभ्रूविलासम् । ॥९२॥

**वामो वास्याः कररुहपदैर्मुच्यमानो मदीयै ....** ॥९३॥

त्वय्यासन्ने वामो वोरुरस्याश्चलत्वं यास्यति स्फुरिष्यति । वाशब्दो नयनस्पन्दापेक्षया विकल्पे । कीदृशोऽसौ? मामकैर्नखक्षतैर्वर्ज्यमानः । नित्याभ्यस्तं च मौक्तिककलापं विधिवैधुर्यात्त्याजित उपेक्षितः । शैत्यार्थं हि तत्र तस्य करणमभूत्। तथा सुरतसमाप्तौ मम करोपमर्दनयोग्यः । अभिनवकदलीकाण्डवच्च गौरः श्वेतः।

**तस्मिन्काले जलद दयिता लब्धनिद्रा यदि स्या .....** ॥९४॥

हे जलद! तस्मिन्कालेऽर्धरात्रसमये प्रिया चेत्सुप्ता भवेत्तदेनामन्वास्य सेवित्वा त्यक्तगर्जितस्त्वं क्षणमात्रं सहस्व प्रतीक्षेथाः । मा स्म तां बोधयः । किमर्थमित्याह । मयि प्रेयसि कथंचिद्दैवात्स्वप्नप्रासादिते सति तस्या गाढोपगूढं दृढालिङ्गनं सद्यस्तत्क्षणं कण्ठच्युतभुजलताग्रन्थि गलभ्रष्टबाहुवल्लीपाशं मा भूत् । आश्लेषविच्छेदो मा स्म भवेदित्यर्थः । नूनं सा मामालिङ्गितमात्मना स्वप्ने द्रक्ष्यति । उपगूढशब्दो भावे । अन्वासनं सेवनम् । यथा । 'अन्वासितमरुन्धत्या स्वाहयेव हविर्भुज'मिति (रघु-१-५६)। 'स्थाणुं तपस्यन्तमधित्यकायाम्। अन्वास्त' (कुमार-३-१७) इति च। ॥९४॥

**तामुत्थाप्य स्वजलकणिकाशीतलेनानिलेन .....** ॥९५॥

ततः सुप्तां तां मनस्विनीं निजोदकबिन्दुभिस्तुषारेण समीरणेनोत्थाप्य गम्भीरगर्जितेनैव वचसा वक्तुं प्रक्रमेथाः प्रारभेथाः । कीदृशीम्? शीतवातसंस्पर्शात्समाश्वस्तां मालतीजालकैः सह । सा हि प्रभाते विकसति । तथा भवदधिष्ठितत्वाद्विद्युद्गर्भे तडित्वति वातायने दिदृक्षया क्षिप्तचक्षुषम् । ॥९५॥

**भर्तुर्मित्रं प्रियमविधवे विद्धि मामम्बुवाहं .....** ॥९६॥

हे अविधवे! पतिवत्नि भावत्कस्य पत्युर्मित्रं प्रियमम्बुवाहं जीमूतं मां त्वं विद्धि जानीहि । तत्संदेशान्मनसि निहितात्तदीयं संदेशं चेतसि गृहीत्वा त्वन्निकटं प्राप्तम् । यश्चाम्बुवाहो मार्गे श्राम्यतां खेदं भजतां प्रोषितानां प्रवासिनां कदम्बकानि मन्द्रस्निग्धैर्मधुरारूक्षैर्गर्जितैस्त्वरयति प्रेरयति गृहाय । यतोऽबलानां कान्तानां वेणिमोक्षणे कबर्युन्मोचन उत्सुकान्युत्कानि । मेघालोके हि विरहो दुःसहः । यस्त्वरयतीत्यम्बुवाहापेक्षया पुंस्त्वं प्रथमपुरुषनिर्देशश्च । मित्रास्मदपेक्षया तु दुर्घटमेतत्स्यात् ॥९६॥

**इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा .....** ॥९७॥

इत्थं त्वयोक्ते सति सा त्वामुद्रक्त्रा दृशा धिया चोपपद्यते तद्भूतत्वमस्येति संभाव्य विचार्यातः परमवहितैकाग्राकर्णयिष्यति । यस्मात्पुरंध्रीणां मित्रेणानीतः

कान्तोदन्तो वल्लभवृत्तान्तः संगमात्किंचिदूनः । प्रियसमागमे समाश्वासोत्पादात्प्रियसंगमनिभ इत्यर्थः । कमिब का वीक्ष्येत्याह । पवनतनयं हनूमन्तं मैथिली सीता यथा पूर्वं दृष्टवती दूतं च संभावितवती । उत्कण्ठयोच्छ्वसितं मुक्तोच्छ्वासं हृदयं यस्याः सा तथोक्ता । ॥९७॥

**तामायुष्मान्मम च वचनादात्मना चोपकर्तुं ..... ॥९८॥**

आयुष्मान्भवान्मदीयेन वचसा स्वयं चोपकर्तुं तामित्थं ब्रूयाद्वदेत् । यथा तव सहचरः पतिश्चित्रकूटासीनोऽव्यापन्नो जीवंस्त्वां कुशलं पृच्छतीति । किमित्युभयगतकुशलकथनमेवादावित्याह । यस्मात्सुप्रापविपत्तीनां शरीरिणामेतदेव पूर्वाशास्यं प्रथमाकाङ्क्षणीयं यत्स्वास्थ्यं नाम । आयुष्मानिति वचने कर्तृपदं न त्वामन्त्रणम् । ब्रूयादिति प्रथमपुरुषप्रयोगात् । आशास्यशब्देऽनुपसर्गाधिकारादेतिस्तुशास्वृद्रिति क्यबभावः (३-१-१००;१०९)। ॥९८॥

**अङ्गेनाङ्गं तनु च तनुना गाढतप्तेन तप्तं ..... ॥९९॥**

ततः किमित्याह? तव प्रेयान्दूरवर्ती संकल्पैरुत्कण्ठावशादङ्गेनाङ्गं विशति वपुषा त्वद्देहं प्रवेष्टुमिच्छति । त्वयैक्यं यियासतीत्यर्थः । भिन्नयोश्चैक्यं सारूप्याद्भवतीति तयोरङ्गयोस्तनु च तनुनेति पृथग्विशेषणैः सादृश्यकथनेन समानुरागतामाह । अस्रं द्रवतीत्यस्रद्रवम् । पचादित्वादच् (३-१-१३४)। कस्मादात्मना नायातीत्याह । विधुरेण विधिना रुद्धवर्त्मा । वियोगस्य वर्षभोग्यत्वात् । तनु च तनुनेति चार्थाभावात्प्रतनु तनुनेति पठनीयम् । ॥९९॥

**शब्दाख्येयं यदपि किल ते यः सखीनां पुरस्ता..... ॥१००॥**

स तव प्रियो सन्मुखेनेदं वक्ष्यमाणं त्वामाह ब्रवीति । स कः । यत्किल शब्दाख्येयं प्रकटवाच्यं तदपि सखीसंनिधाने व्याजं विधाय यस्तव कर्णे वक्तुं लोलः साकाङ्क्ष आसीत् । कुतो हेतोः? आननस्पर्शलोभात् । कर्णे कथनं हि तस्य त्वन्मुखस्पर्शसुखानुभवाय । कीदृशः सः । श्रवणविषयमतिक्रान्तोऽप्राप्तः । दूरस्थत्वात् । अत एव लोचनानामगम्यो नेत्रैर्द्रष्टुमशक्यः । उत्कण्ठया विरचितानि पदानि शब्दा यत्रेति कथनविशेषणम् । ॥१००॥

**श्यामास्वङ्गं चकितहरिणप्रेक्षिते दृष्टिपातं ..... ॥१०१॥**

हे भीरु! कातरे तव सारूप्यमेकस्थं कष्टं क्वचिदपि न विद्यते । यदा लोक्यात्मानं समाश्वामयेयम् । तथा हि श्यामालतासु तवाङ्गमुत्प्रेक्षे । तद्वत्तनुत्वात् ।

चकितहरिणप्रेक्षणे च दृष्टिपातम् । त्रस्तसारङ्गवच्चटुलावलोकनात् । एवमुत्तरत्र यथायथं योज्यम् । कपोलकान्तिं मृगाङ्क उत्पश्यामि । मयूराणां कलापाटोपेषु कचभरम् । सूक्ष्मसरित्कल्लोलेषु भ्रूविलासान् । भीर्वित्यन्वर्थं नाम नारीणाम् । संज्ञापूर्वको विधिरनित्य (परि-९३) इति ह्रस्वगुणाभावः (७-३-१०८) ॥१०१॥

**त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया ..... ॥१०२॥**

भवतीं प्रणयकुपितां प्रीत्या रुषितां धातुरागैः सिन्दूरादिरागैर्दृषत्स्वालिख्य प्रार्थनयात्मानं तव पादगतं कर्तुं यावदिच्छामि तावत्त्वदाकारस्य स्मरणाद्बाष्पैरसकृदुपचितैर्वृद्धैश्चक्षुषी ममाच्छाद्येते । अतश्च तस्मिन्नपि त्वदाकारे तत्रापि चित्रे क्रूरो विषमो विधिर्नावावयोः समागमं न क्षमते । ॥१०२॥

**मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो ..... ॥१०३॥**

हे सति! गुणवति! तव स्वप्ने दैववशात्प्राप्ताया गाढालिङ्गनायाकाशे शून्य एव प्रसारितभुजं मां वीक्षमाणानां वनदेवतानां द्रुमपल्लवेषु मौक्तिकपृथवो बाष्पकणा असकृन्न खलु न पतन्ति । अपि तु भ्रश्यन्त्येव । तादृशीं मे दशामालोक्य ता अपि कृपया रुदन्तितरामित्यर्थः । ॥१०३॥

**भित्त्वा सद्यः किसलयपुटान्देवदारुद्रुमाणां ..... ॥१०४॥**

हे गुणवति! शीलान्विते सरलतरूणां तत्क्षणं पल्लवकवाटानुपमृद्य तद्द्रुमसंबन्धिक्षीरस्रुतिसुगन्धयो ये हिमालयानिला दक्षिणेन प्रवृत्ता अस्यां दिशि वातुं प्रस्तुतास्ते मयाश्लिष्यन्ते । किमर्थम्? यदि किलैभिर्मारुतैः सहवासात्कदाचित्त्वदीयं शरीरं स्पृष्टं भवेत् । अतश्च । वाहि वात यतः कान्ता तां स्पृष्ट्वा मामापि स्पृशेः । बह्वे तत्कामयानस्य शक्यमेतेन जीवितुम् (वाल्मी-रामा-५-७५-८)॥ दक्षिणेनेत्येनबन्तः (५-३-३५)। ॥१०४॥

**संक्षिप्येरन्क्षण इव कथं दीर्घयामास्त्रियामाः ..... ॥१०५॥**

हे चञ्चललोचने! गाढोष्माभिस्तीव्रसंतापाभिस्त्वद्विरहचिन्ताभिर्मम मन इत्थं दुर्लभप्रार्थनं कृतम् । यद्यद्दुष्प्रापं तत्तदभिलषामीत्यर्थः । तथा हि दीर्घप्रहरास्त्रियामा निशा निमेष इव कथं नाम संक्षिप्येरन्गच्छेयुः । तथा ग्रीष्ममध्याह्नादिष्वपि सकलासु दशासु दिनमतिमृदुरविप्रभं कथं स्यादिति । एतच्च दुर्लभम् । न हि निखिला क्षणदा क्षणवत्क्षीयते । न च दिनं सर्वदा मन्दातपं भवति । गाढोष्माभिरिति डाबुभाभ्यामन्यतरस्याम् (४-१-१३)। संक्षिप्येरन्निति कर्मकर्तरि । ॥१०५॥

**नन्वात्मानं बहु विगणयन्नात्मना नावलम्बे ..... ॥१०६॥**

आत्मावस्थां प्रतिपाद्य संप्रति कर्तव्यतामाह । हे कल्याणि! भद्रे! तत्रापि नन्वात्मानं बहुविधं विगणयञ्आनन्स्वयमेव नावलम्बे न । अपि त्ववलम्ब एव । पामीत्यर्थः । तत्त्वमपि प्रिये कातरत्वमधैर्यं सुतरामत्यर्थं मा गमो मा यासोः । यस्मात्कस्य संसारिणो नित्यं सुखमुपनतं घटितमेकान्ततो नियमेन दुःखं वा । यत एताः सुखासुखरूपा दशा अवस्थाश्चक्रनेमिवत्कदाचिन्नोचैर्गच्छन्त्यधो यान्ति कदाचिच्चोपरि पृष्ठे । रथाङ्गधारा हि भ्रमन्ती क्रमेणाध उपरि च याति । तदुक्तम् । सुखं च दुःखं च भवाभवौ च लाभालाभौ मरणं जीवितं च । पर्यायशः सर्वमिह स्पृशन्ति तस्माद्धीरो न प्रहृष्येन्न शोचेत् ॥ नन्वभिमुखीकरणे । सा गम इति लृदित्त्वादङ् (३-१-५५)।

**शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ ..... ॥१०७॥**

कार्तिकशुक्लद्वादश्यां भुजगशयनाच्छेषतल्पादुत्थिते शार्ङ्गपाणौ हरौ मम शापान्तो भषिप्यति । तदैव वर्षस्य परिपूर्णत्वात् । अतश्चाद्यारभ्य मासाचतुष्टयं लोचने मीलयित्वा यथा कथंचिद्गमयातिवाहय । ततः पश्चात्संयोगे सति चिरकालगुणितं तीक्ष्णं तं तं नानाविधमात्मनोऽभिलाषं कामं परिपक्वशारदज्योत्स्नासु निशास्वावां निर्वेक्ष्याव उपभुञ्जावहे । लोचननिमीलनेनात्र यथा तथा त्वं लक्ष्यते । ॥१०७॥

**भूयश्चाह त्वमपि शयने कण्ठलग्ना पुरा मे ..... ॥१०८॥**

स त्वत्प्रिय एतदुक्त्वा पुनरपि त्वामिदमाह । यथा पूर्वं भवती तल्पे मामालिङ्ग्य च सुप्ता केनापि निमित्तेन सशब्दं रुदती विप्रबुद्धा विनिद्रा जाता । ततो रोदनहेतुमसकृत्पृच्छतो मम त्वयोक्तम् । हे कितव! धूर्त! कामपि वनितां रमयन्भवान्स्वप्ने मयावलोकितः । अत ईर्ष्याकोपेनाहमरुदमिति । ॥१०८॥

**एतस्मान्मां कुशलिनमभिज्ञानदानाद्विदित्वा ..... ॥१०९॥**

हे कुवलयाक्षि! एतस्मादभिज्ञानदानान्मां स्वस्थमवेत्य कौलीनाल्लोकापवादमात्रान्मयि त्वमविश्वासिनी निष्प्रत्यया मा भूः । तदेव कौलीनमाह । किमपि कुतोऽपि हेतोः स्नेहान्विरहह्रासिनो वियोगे तनूभवतो जना आहुः । यथा । प्रीतिः प्रवासाश्रयादिति (भर्तृ-नीति-३३)। एतच्चायुक्तम् । यस्मात्ते स्नेहा अभोगाद्धेतोरिष्टे वस्तुनीप्सितेऽर्थ उपचितरसाः सन्तः प्रेम्णो राशीभवन्ति प्रीतिमयाः संपद्यन्ते । हृदयवल्लभविषये वियोगवशात्सहस्रगुणः स्नेहः संपद्यत इत्यर्थः । त्वयि च मम या प्रीतिस्तां त्वमेव जातासि । कौलीनं लोकापवादः । ॥१०९॥

**कच्चित्सोम्य व्यवसितमिदं बन्धुकृत्यं त्वया मे .....  ॥११०॥**

हे सोम्य! प्रियदर्शनैतन्मित्रकार्यं कच्चिद्भवता व्यवसितसङ्गीकृतं मम । अवश्यमत्र त्वया व्यवसायवता भाव्यम् । प्रत्याख्यातुमत्र तव धैर्यं न लक्षयामि । तथा हि त्वमर्थितः सन्नब्रुवन्नपि चातकेभ्यस्तोयं वितरसि । यस्मान्महतामर्थिष्वभिमतार्थ संपादनमेव प्रतीपवचनम् । महान्तो हि कर्मणा ब्रुवन्ति न वचसा । ॥११०॥

**एतत्कृत्वा प्रियमनुचितप्रार्थनावर्त्मनो मे .....  ॥१११॥**

स एवमुक्त्वाशिषमाह - हे जलधरानुचितप्रार्थनावर्त्मनोऽननुरूपयाच्ञामार्गस्य ममैतत्संदेशहरणलक्षणं प्रियं विधाय ततस्त्वं वर्षाकालेऽर्जितदेहोन्नतिरभिमतं स्थानं विचर भ्रम । कुतो विधाय? स्नेहेन प्रीत्या । स्नेहाभावश्चेत्तद्विधुरो दुःखितोऽयमिति मयि कृपाधिया वा । किं बहुना? एवमनेन प्रकारेण मद्वत्तवापि निमेषमपि तडित्प्रियया विरहो मा भूदिति भद्रम् ।  ॥१११॥

**इति राजानकानन्ददेवात्मज-**
**परमात्मचिह्नापरनाम-**
**वल्लभदेवविरचिता**
**मेघदूतविवृतिः**
**समाप्ता ॥**

**॥ अनुबन्धम् ॥**

**अध्वक्लान्तं प्रतिमुखगतं सानुमानाम्रकूट .....**

त्वां पथि श्रान्तं संमुखागतमाम्रकूटाख्यः सानुमानुच्चेन शिरसा श्लाघया वक्ष्यति । त्वमपि तस्य वेगवर्षेण दावानलं निर्वापयेः । यस्मान्महापुरुषेषु सत्कारार्द्रः पूजार्द्र उपकारो यो विधीयते सोऽचिरेणैव फलिष्यति । अत्र महत्त्वं मेघस्य । पूर्वत्र तु पर्वतस्य । सर्वोन्नतोऽपि जलधरोऽत्र विश्राम्यतीत्यद्रेः श्लाघात्र ॥

**धारासिक्तस्थलसुरभिणस्त्वन्मुखस्यास्य बाले .....**

धाराभिरुदकधाराभिः सिक्तं यत्स्थलं भूस्तदिव सुरभिणः परिमलवतस्त्वन्मुखस्य त्वदाननस्य दूरीभूतं दूरस्थम् । अत एव प्रतनुमतिकृशम् । तथाभूतमपि मां पञ्चबाणः। पञ्च बाणाः शरा अरविन्दादयो यस्य सः । मन्मथः क्षिणोति बाधते । क्षिणोतेर्लट् । घर्मान्ते वै ग्रीष्मान्ते तु । वर्षाकाले त्वित्यर्थः । दिक्षु सम्यक् सक्ताः संसक्ता अप्रविरला मेदुराश्च ये घना मेघास्तैरव्यक्तः सूर्यस्यातपो येषु तानि वासराणि कथं

केन प्रकारेण व्रजेयुर्गच्छेयुर्बत कष्टं वद ब्रूहि ।।

**तत्संदेशं जलधरवरो दिव्यवाचा चचक्षे .....**

जलधरवरः । पुष्कलावर्तकानां वंशे जातत्वाज्जलधराणां वरः श्रेष्ठो मेघः । तस्या यक्षवध्वाः प्राणानसून्रक्षितुम् । जनाय हित इष्टः । श्रोत्रयोर्मधुर इति यावत्। रवो ध्वनिर्यस्य । तथाभूतः संस्तस्य यक्षस्य संदेशं वाचिकं पूर्वोक्तम् । संदेशवाग्वाचिकं स्यादित्यमरः । दिव्यवाचा । दिवि भवा दिव्या देवाः । तेषां वाक् । तया चचक्ष उक्तवान् । चक्षिङो लिट् । कामरूपं मघोन इति पूर्वं यक्षेणैवोक्तत्वात्तदानीं मेघो देवाकारीभूय तादृग्वाचा यक्षसंदेशं यक्षवध्वा उवाचेत्यर्थः । सा यक्षवधूरपि स्वभर्तुरुदन्तं कुशलस्यागमनस्य च वार्त्तां प्राप्य । श्रुत्वेत्यर्थः । प्रमुदितमनाः संहृष्टचित्ता सती तस्थावतिष्ठत् । तथा ह्युत्तसेषु केषां प्रार्थनाभिमतफला न स्यात् । उत्तमेषु पुरुषेषु सर्वेषां प्रार्थनाभिमतफला स्यादेवेत्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।।

**श्रुत्वा वार्त्तां जलदकथितां तां धनेशोऽपि सद्यः .....**

धनेशः कुबेरोऽपि जलदकथिताम् । जलमुदकं संतापमतप्ताय ददातीति जलदः । अनेनास्य परोपकारित्वं स्पष्टीकृतम् । जलदेन कथितामुक्तां तां तादृशीम्। सदैन्यामिति यावत् । वार्त्तां यक्षस्य वार्तां श्रुत्वा सद्यो यक्षवार्त्ताश्रवणकाल एव सदयहृदयो दयासहितचित्तः । अत एवास्तकोपः प्रनष्टयक्षविषयकरोषः सञ्शापस्यान्तमवसानं संनिधाय संनिहितं कृत्वा । कतिचिद्दिनान्यवशिष्टान्यप्यविगणय्येत्यर्थः । विगलितशुचौ निवृत्तव्यसनौ । अत एव हृष्टचित्तौ संतुष्टमानसावेतौ पूर्वोक्तौ दंपती । जाया च पतिश्च दंपती । जायाशब्दस्य जंभावो दंभावश्च निपात्यते। संयोज्याभिमतसुखान् । अभिमतं सुखं येषु तान् । अत एवेष्टानिच्छाविषयीभूतान्भोगान्भूयः पुनरपि पूर्ववत्प्रापयामास गमयामास ।।

श्रीः

## Books broughtout under the guidence of Ravi MohanRao since 1992

| | | | | |
|---|---|---|---|---|
| శ్రీ బిల్వాష్టోత్తర శతనామస్తోత్రమ్ | మూలం | | రామోరా | 10-02-1992 |
| కటాక్షశతకమ్ | సారోల్లాసినీవ్యాఖ్యా | దోర్బల విశ్వనాథశర్మ | సాధనగ్రంథమండలి | 19-03-1992 |
| సర్వేశ్వర శతకము | మూలం | యథావాక్కుల అన్నమయ్య | సాధనగ్రంథమండలి | 07-05-1992 |
| వృషాధిపశతకము | మూలం | పాల్కుర్కి సోమన | శ్రీశైలదేవస్థానం | 01-05-1992 |
| దండకషట్కము | టీకా | ప్రాచీనం | శ్రీజయలక్ష్మి పబ్లికేషన్స్ | 10-06-1993 |
| గీతగోవిందమ్ | టీకా | | వావిళ్ళ ప్రచురణ | ఆగష్టు - 1993 |
| శివస్తోత్రకదంబమ్ | మూలము | | సాధనగ్రంథమండలి | ఉగాది - 1994 |
| పాదారవిందశతకము- | టీకా | ఎస్.పి.లోకాచార్యులు | సాధనగ్రంథమండలి | 27-02-1995 |
| మహిషాసురమర్దినీస్తోత్రమ్ | టీకా | శంకర కింకరుడు | సాధనగ్రంథమండలి | 09-04-1995 |
| ఆత్మవిద్యావిలాసమ్-సదాశివబ్రహ్మేంద్రుడు | అనువాదము | శంకర కింకరుడు | సాధనగ్రంథమండలి | 24-05-1995 |
| స్తుతిశతకమ్- (మూక పంచశతి) | అర్థాలు | వి.ఏ.కుమారస్వామి | సాధనగ్రంథమండలి | 07-11-1995 |
| మందస్మితశతకమ్ - (మూకపంచశతి) | సారోల్లాసినీ వ్యాఖ్య | దోర్బల విశ్వనాథశర్మ | సాధనగ్రంథమండలి | 17-02-1996 |
| పురాజీవశాస్త్రము | Text | రావి మోహనరావు | రావి మోహనరావు | 15-08-1996 |
| శివమీడేస్తవః | హర్షిణీ వ్యాఖ్య | దోర్బల విశ్వనాథశర్మ | రావి మోహనరావు | 29-08-1996 |
| అమరుక శతకము - శ్రీశంకరాచార్య | మనసిజ వ్యాఖ్య | దోర్బల విశ్వనాథశర్మ | సాధనగ్రంథమండలి | 24-11-1996 |
| ఆర్యాశతకమ్ - (మూకపంచశతి) | సారోల్లాసినీవ్యాఖ్య | దోర్బల విశ్వనాథశర్మ | సాధనగ్రంథమండలి | 15-01-1997 |
| శివపద మణిమాలా - నటేశనవకమ్ | టీకా | శంకర కింకరుడు | సాధనగ్రంథమండలి | 16-04-1997 |
| శ్రీపరశంభుమహిమ్నఃస్తోత్రమ్ | శివప్రియా వ్యాఖ్య | దోర్బల విశ్వనాథశర్మ | శ్రీశైలదేవస్థానము | 01-05-1998 |

| | | | | |
|---|---|---|---|---|
| బిల్వాష్టోత్తరశతనామస్తోత్రమ్ | శివోల్లాస వ్యాఖ్య | స్ఫూర్తిశ్రీ | సాధనగ్రంథమండలి | 25-08-1998 |
| శ్రీసుందరేశ్వరవిలాసము | కావ్యం | బ్రహ్మశ్రీ చెఱువు సత్యనారాయణశాస్త్రి | | 02-10-1998 |
| హరిమీడేస్తవః - శంకరాచార్య | మచ్చర్చికా వ్యాఖ్య | దోర్బల విశ్వనాథశర్మ | విశ్వేశ్వరాశ్రమము | 29-12-1998 |
| శ్రీరుద్ర నమకమ్-చమకమ్ | మూలం | - | సాధనగ్రంథమండలి | 14-02-1999 |
| Basic Principles of Hydrogeology | Text | R.M.Rao & Others | సాధనగ్రంథమండలి | 10-04-1999 |
| శ్రీ హలాయుధ శివస్తోత్రమ్ | డమరుక వ్యాఖ్య | దోర్బల విశ్వనాథశర్మ | సాధనగ్రంథమండలి | 04-03-2000 |
| Basic Principles of Hydrogeology | Text (Revised) | R.M.Rao & Others | సాధనగ్రంథమండలి | 22-04-2000 |
| చండీ శతకము (బాణుడు) | ప్రసాదినీ వ్యాఖ్య | దోర్బల విశ్వనాథశర్మ | సాధనగ్రంథమండలి | 08-05-2000 |
| శ్రీసోమనాథభాష్యమ్ | పాఠపరిష్కరణ | దోర్బల విశ్వనాథశర్మ | సాధనగ్రంథమండలి | 09-01-2001 |
| శివకర్ణామృతస్తోత్రమ్ (1) | ఆస్వాదినీవ్యాఖ్య | దోర్బల విశ్వనాథశర్మ | విశ్వేశ్వరాశ్రమము | 21-02-2001 |
| శ్రీ గుణరత్నకోశః (పరాశరభట్టరు) | ఆంధ్రరత్నదీపికా | కె.వి.ఆర్.నరసింహాచార్యులు | ఉభయవేదాంతసభ | 02-04-2001 |
| వేదమంత్రరామాయణమ్ (1) | తెనుగుసేత | మైత్రేయ | సాధనగ్రంథమండలి | 15-08-2001 |
| శ్రీత్రిపురామహిమ్నస్తోత్రమ్-శ్రీదుర్వాస | శ్రీనీరాజన వ్యాఖ్య | మేళ్ళచెర్వు | సాధనగ్రంథమండలి | 15-08-2001 |
| శ్రీరంగనాథ సుప్రభాతమ్ | శ్రీసేవావ్యాఖ్య | ఈ.ఏ.శింగరాచార్యులు | సాధనగ్రంథమండలి | 11-09-2001 |
| శ్రీశివకర్ణామృత స్తోత్రమ్-2 | ఆస్వాదినీ వ్యాఖ్య | దోర్బల విశ్వనాథశర్మ | సాధనగ్రంథమండలి | 15-10-2001 |
| గరుడదండకః-వేదాన్తదేశికప్రణీతమ్ | టీకా | ఈ.ఏ.శింగరాచార్యులు | సాధనగ్రంథమండలి | 26-12-2001 |
| శ్రీ శివకర్ణామృతస్తోత్రమ్-3 | ఆస్వాదినీ | దోర్బల విశ్వనాథశర్మ | శ్రీశృంగేరీశారదాపీఠం | 12-03-2002 |
| ఏకశ్లోకరామాయణమ్ | మోహనరూపావ్యాఖ్య | దోర్బల విశ్వనాథశర్మ | సాధనగ్రంథమండలి | 21-04-2002 |
| స్తుతిశతకమ్ (మూకపంచశతి) | సారోల్లాసినీవ్యాఖ్య | దోర్బల విశ్వనాథశర్మ | సాధనగ్రంథమండలి | 21-04-2002 |

| | | | | |
|---|---|---|---|---|
| శ్రీరంగనాథుని అభిషేకచూర్ణికలు | శ్రీసేవావ్యాఖ్య | ఈ.ఏ.శింగరాచార్యులు | సాధనగ్రంథమండలి | 31-08-2002 |
| వేదమంత్రరామాయణమ్-2 | తెనుగుసేత | మైత్రేయ | సాధనగ్రంథమండలి | 15-10-2002 |
| అద్వైత విజయః (బెల్లంకొండ) | ఆంధ్రానువాదము | మేళ్ళచెర్వు | రావి కృష్ణకుమారి | 31-10-2002 |
| శ్రీమదనన్తస్తవః/కె.ఎస్.రామానుజాచార్యులు | శ్రీసేవావ్యాఖ్య | ఈ.ఏ.శింగరాచార్యులు | ఉభయవేదాంతసభ | 08-11-2002 |
| అష్టక పంచకమ్ - బెల్లంకొండ | టీకా | మేళ్ళచెర్వు | సాధనగ్రంథమండలి | 27-12-2002 |
| అద్వైతామృతం - వేదాన్తనిశ్చయః | ఆంధ్రానువాదం | మేళ్ళచెర్వు | సాధనగ్రంథమండలి | 27-12-2002 |
| శ్రీమద్ధయవదన శతకమ్ | హేషావ్యాఖ్య | ముళ్ళపూడి విశ్వనాథశాస్త్రి | రావి కృష్ణకుమారీ | 14-01-2003 |
| అమలనాదిపిరాన్ | శ్రీసేవావ్యాఖ్య | ఈ.ఏ.శింగరాచార్యులు | సాధనగ్రంథమండలి | 02-04-2003 |
| సిద్ధాంతబిందుః - బెల్లంకొండ | సంస్కృతమూలం | తెలుగులిపి | రావి కృష్ణకుమారి | 24-05-2003 |
| భాగవతచతుశ్లోకీ | చాతురీ-మేళ్ళచెర్వు మంత్ర - దోర్బల | సంస్కృతవ్యాఖ్య - బెల్లంకొండ | సాధనగ్రంథమండలి | 19-08-2003 |
| జగన్నాథ సుధాలహరీ + ఋగ్వేదసూర్యసూక్తమ్ | పావనీవ్యాఖ్య | ఇ.వి.యస్.మూర్తి | సాధనగ్రంథమండలి | 21-09-2003 |
| రామకృష్ణవిలోమకావ్యమ్/సూర్యకవి | ద్విరసనాఖ్యయా | మేళ్ళచెర్వు | సాధనగ్రంథమండలి | 25-10-2003 |
| శ్రీరమావల్లభరాయశతకమ్/బెల్లంకొండ | పీఠిక - తి త ఉ వు | మేళ్ళచెర్వు | సాధనగ్రంథమండలి | 27-12-2003 |
| చిద్గగనచంద్రిక-1 కాళిదాసు | విశ్వలహరీవ్యాఖ్య | దోర్బల విశ్వనాథశర్మ | సాధనగ్రంథమండలి | 15-01-2004 |
| శ్రీశివమానసికపూజాస్తుతిః | టీక | శంకరకింకరుడు | సాధనగ్రంథమండలి | 17-03-2004 |
| ఋతుసంహారః కాళిదాసు | మృణాళినీవ్యాఖ్య | రామోరా | రావి కృష్ణకుమారీ | 04-05-2004 |
| కావ్యాలంకారః (భామః) | బాలానందినీవ్యాఖ్య | పుల్లెల శ్రీరామచంద్రః | సంస్కృతభాషా ప్రచార సమితి | 28-11-2004 |

| | | | | |
|---|---|---|---|---|
| ఘటకర్పరకావ్యమ్ | మంజరీవ్యాఖ్య | రామోరా/దుర్గానంద | రావి కృష్ణకుమారీ | 01-04-2005 |
| తిరుప్పావై | టీక | ఈ.ఏ.శింగరాచార్యులు | సాధనగ్రంథమండలి | 18-04-2005 |
| బీజతంత్రమ్ | సంకలనం | మేళ్ళచెర్వు | రామోరా | 08-06-2005 |
| శ్రీమద్భాగవతమహాపురాణము (సప్తమ) | టీక | చదలవాడ జయరామశాస్త్రి | సాధనగ్రంథమండలి | 27-08-2005 |
| సంస్కృతనిఘంటుః ద్విరూపకోశం | సంకలనం | చింతా సుందరరామశాస్త్రి | రామోరా | 15-08-2005 |
| స్తన్యధారాస్తవః (సంస్కృతం) | - | మేళ్ళచెర్వు | రామోరా | 23-01-2006 |
| పుష్పబాణవిలాసః (కాళిదాసు) | శృంగారచంద్రిక | వేదం వేంకటరాయః | రావి కృష్ణకుమారీ | 26-02-2006 |
| ధర్మమంజరీ (బెల్లంకొండ) | ఆంధ్రానువాదము | ధర్మపురి శేషగిరిశర్మ | సాధనగ్రంథమండలి | 01-05-2006 |
| మేఘధూతం (కాళిదాసు) | మృణాళినీవ్యాఖ్య | రామోరా | రామోరా | 18-06-2006 |
| కళ్యాణచంపుః - ముల్లు పాపయా | సంస్కృతం - పీఠిక | నిష్టల సుబ్రహ్మణ్యం | సంస్కృతభాషా ప్రచార సమితి | 21-09-2006 |
| వాగ్దేవీ స్తుతిః (భోజరాజు) | కచ్ఛపీ వ్యాఖ్య | మేళ్ళచెర్వు | రావి కృష్ణకుమారీ | 15-10-2006 |
| శ్రీలాలిత్యము | - | దోర్బల విశ్వనాథశర్మ | సాధనగ్రంథమండలి | 15-10-2006 |
| ముక్తిద్వారాస్తవం-ముల్లుపాపయాధ్యుడు | ఉద్గాటినీ వ్యాఖ్య | మేళ్ళచెర్వు | రావి మోహనరావు | 15-10-2006 |
| ఆంధ్ర వాఙ్మయ చరిత్ర -1 | - | గోగినేని యోగప్రభావతీదేవి | తెలుగుగోష్ఠి | 20-03-2007 |
| శ్రీమద్భాగవతమహాపురాణమ్ (అష్టమ) | టీకా | చదలవాడ జయరామశాస్త్రి | సాధనగ్రంథమండలి | 22-04-2007 |
| అభీతిస్తవము (వేదాంతదేశికః) | శ్రీసేవావ్యాఖ్య | ఈ.ఏ.శింగరాచార్యులు | రామోరా | 15-01-2008 |
| శ్రీమద్రమావల్లభరాయశతకం (బెల్లంకొండ) | సంస్కృత మల్లికావ్యాఖ్య | మేళ్ళచెర్వు | సంస్కృత భాషా ప్రచార సమితి | 21-02-2008 |

| | | | | |
|---|---|---|---|---|
| ఆత్మవిద్యావిలాసము- సదాశివ బ్రహ్మేంద్రుడు | ఆంధ్రానువాదము | శంకరకింకరుడు | శ్రీలలితానందాశ్రమము | 03-09-2008 |
| మూకపంచశతి | సారోల్లాసినీవ్యాఖ్య | దోర్బల విశ్వనాథశర్మ | రావి కృష్ణకుమారి | 23-02-2009 |
| భైరవస్తోత్రమ్ - అభినవగుప్తుడు | టీకా | శిష్టిలక్ష్మీకుమారశర్మ | బ్రహ్మేంద్రాశ్రమము | 21-03-2009 |
| స్వయంవరకళాస్తోత్రం | వ్యాఖ్య | నిష్టల సుబ్రహ్మణ్యం | సదాశివబ్రహ్మేంద్రాశ్రమం | 30-04-2009 |
| కరుణాలహరీ-జగన్నాథుడు | నాగమాతావ్యాఖ్య | ఈ.ఏ. శింగరాచార్యులు | రామోరా | 02-05-2009 |
| విజ్ఞానదీపిక (పద్మాపాదాచార్య) | ఆంధ్రానువాదం | చింతగుంట సుబ్బారావు | శ్రీలలితానందాశ్రమము | 15-06-2009 |
| విజ్ఞానదీపిక (సంస్కృతం) | వివృతివ్యాఖ్య | శ్రీపద్మపాదాచార్య | సంస్కృతభాషాప్ర॥స॥ | 23-07-2009 |
| శ్రీసూక్తివ్యాఖ్యానమ్ | పదపరిచర్యావ్యాఖ్య | ఈ.ఏ. శింగరాచార్యులు | సదాశివబ్రహ్మేంద్రాశ్రమము | 17-10-2009 |
| బహుళాశ్వచరిత్ర-దామర్ల | పీఠిక | ఉన్నం జ్యోతివాసు | స్వప్న పబ్లికేషన్స్ | 28-12-2009 |
| A Luminous Flame | Sri Aurobindo's 'Savitri' | ప్రేమానందకుమార్ | సదాశివబ్రహ్మేంద్రాశ్రమము | 05-12-2009 |
| శివలీలావిలాసము-తిమ్మకవి | పీఠిక | ఉన్నం జ్యోతివాసు | స్వప్న పబ్లికేషన్స్ | 12-02-2010 |
| కైవల్యనవనీతం | టీకా | విద్యానందనాథుడు | సదాశివబ్రహ్మేంద్రాశ్రమము | 12-02-2010 |
| శ్రీరామచరితం | వచనం | గాలి గుణశేఖర్ | రావి కృష్ణకుమారి | 24-03-2010 |
| సాంబపంచాశికా | మయూఖమాలినీవ్యాఖ్య | మేళ్ళచెర్వు | రావి కృష్ణకుమారి | 24-03-2010 |
| కబీరువాణి | అనుసృజన | శ్రీమతి సూర్యదేవర లలితారాణి | సదాశివబ్రహ్మేంద్ర ఆశ్రమము | 18-05-2010 |
| శ్రీశంకరాశంకరభాష్యవిమర్శః (సం॥) | మూలం | - | బెల్లంకొండరామరాయ ట్రస్ట్ | 24-05-2010 |

| | | | | |
|---|---|---|---|---|
| కుమారసంభవమహాకావ్యమ్-1 | మృణాళినీవ్యాఖ్య | రామోరా | రామోరా | 01-09-2010 |
| సుభద్రాపరిణయము (జగ్గకవి) | మూలం | - | రావి కృష్ణకుమారి | 05-09-2010 |
| కుమారసంభవమహాకావ్యమ్-2 | మృణాళినీవ్యాఖ్య | రామోరా | రామోరా | 11-12-2010 |
| కుమారసంభవమహాకావ్యమ్-3 | మృణాళినీవ్యాఖ్య | రామోరా | రామోరా | 08-05-2011 |
| కుమారసంభవమహాకావ్యమ్-4 | మృణాళినీవ్యాఖ్య | రామోరా | రామోరా | 21-08-2011 |
| శ్రీకృష్ణచరితం | వచనం | గాలి గుణశేఖర్ | రావి కృష్ణకుమారి | 22-08-2011 |
| కుమారసంభవమహాకావ్యమ్-5 | మృణాళినీవ్యాఖ్య | రామోరా | రామోరా | 26-10-2011 |
| కుమారసంభవమహాకావ్యమ్-6 | మృణాళినీవ్యాఖ్య | రామోరా | రామోరా | 05-01-2012 |
| శ్రీవిజ్ఞానభైరవతంత్ర | కీటభ్రమరణావ్యాఖ్య | మేళ్ళచెర్వు | రామోరా | 20-02-2012 |
| శ్రీశివగీతా | శ్రీఫలమంజరీవ్యాఖ్య | మేళ్ళచెర్వు | రావి కృష్ణకుమారి | 24-05-2012 |
| రాఘవయాదవీయం-వేంకటాధ్వరి | హరిప్రియావ్యాఖ్య | గరిమెళ్ళ | రామోరా | 30-06-2012 |
| కథాకాసారము | వచనం | సౌభాగ్య | రామోరా | 03-07-2012 |
| కుమారసంభవమహాకావ్యమ్-7 | మృణాళినీవ్యాఖ్య | రామోరా | రామోరా | 18-12-2012 |
| శ్రీభగవద్గీత | మంజరీద్విపద | తెలుగుఅనువాదం మురకొండ నాగేశ్వరరావు | | 05-12-2012 |
| మైరావణచరిత్రము | పీఠిక-టిప్పణి | గరిమెళ్ళ | రావి మోహనరావు | 03-06-2013 |
| రఘువంశః - 1 | మృణాళినీవ్యాఖ్య | రామోరా | రామోరా | 29-08-2013 |
| దశావతారస్తోత్రమ్ | వ్యాఖ్య | ఈ.ఏ.శింగరాచార్యులు | రావి మోహనరావు | 09-09-2013 |
| వరాహోపనిషత్తు | రసావ్యాఖ్య | మేళ్ళచెర్వు | లలితానందాశ్రమం | 09-09-2013 |
| శ్రీమదాంధ్రమహాభాగవతము | ఏకాదశస్కంధం- | కోవూరి పట్టాభిరామశర్మ | పుష్పగిరిపీఠం | 05-09-2013 |

| | | | | |
|---|---|---|---|---|
| | పద్యకావ్యం | | | |
| శ్రీదేవీఖడ్గమాలా | సంకలనం | రామోరా | రావి మోహనరావు | 14-10-2013 |
| శ్రీహయగ్రీవసహస్రనామావళిః | సంస్కృతవ్యాఖాసహితా | బెల్లంకొండ.రామరాయకవి | సాధనగ్రంథమండలి | 31-01-2014 |
| కనకధారాస్తవము-శంకరాచార్య | జాతవేదావ్యాఖ్య | మేళ్ళచెర్వు | సాధనగ్రంథమండలి | 27-02-2014 |
| శ్రీశివకర్ణామృతస్తోత్రమ్ | ఆస్వాదినీవ్యాఖ్య | దోర్బలవిశ్వనాథశర్మ | రావి మోహనరావు | 27-02-2014 |
| రఘువంశః - 2 | మృణాళినీవ్యాఖ్య | రామోరా | రామోరా | 27-02-2014 |
| శివతాండవస్తోత్రం - రావణ | టీకా | శంకరకింకరుడు | రావి కృష్ణకుమారి | 10-03-2014 |
| శివమీడేస్తవః | హర్షిణీవ్యాఖ్య | దోర్బల విశ్వనాథశర్మ | రామోరా | 08-04-2014 |
| శంకరాశంకరభాష్యవిమర్శః (తెలుగు) | ఆంధ్రానువాదము | మేళ్ళచెర్వు | లలితానందాశ్రమము | 08-04-2014 |
| అశ్వధాటీకావ్యమ్ | నవవీథీవ్యాఖ్య | గరిమెళ్ళ | రామోరా దంపతులు | 23-05-2014 |
| శ్రీసదాశివబ్రహ్మేంద్ర కీర్తనాని | టీక | శంకరకింకరుడు | శ్రీలలితానందాశ్రమం | 09-05-2014 |
| శివసహస్రనామస్తోత్రమ్ (సం॥) | మూలం | - | రామోరా | 10-06-2014 |
| హయగ్రీవ స్తోత్రాణి | టీక | ఈ.ఏ.శింగరాచార్యులు | సాధనగ్రంథమండలి | 28-07-2014 |
| లలితారహస్యసహస్రనామస్తోత్రమ్ | మూలం సంస్కృతం | భట్టనారాయణ | రామోరా | 01-08-2014 |
| శ్రీవిష్ణులహరి | అమృతధారావ్యాఖ్య | గరిమెళ్ళ | రామోరా | 23-10-2014 |
| బెల్లంకొండ రామరాయ-శ్రీమద్భగవద్గీతా | 'భాష్యార్క' ప్రకాశికానువాదము | మల్లావజ్జల వేంకట సుబ్బరామశాస్త్రి | రావి కృష్ణకుమారి | 02-12-2014 |
| వల్లీపల్లవోల్లాసము (మాడభూషి) | పీఠిక | ఉన్నం జ్యోతివాసు | రామోరా దంపతులు | 17-02-2015 |
| వేదాంతముక్తావళి-సంస్కృతం | దినకరీవ్యాఖ్యసహితా | బెల్లంకొండ రామరాయకవిః | రావి కృష్ణకుమారి | 02-06-2015 |

| | | | | | |
|---|---|---|---|---|---|
| | బీజాక్షరనిఘంటువు | సంకలనం | మేళ్ళచెర్వు | యోగపీఠం, గుంటూరు | 22-07-2015 |
| | ఋతుసంహారః - 2nd Edition | మృణాళినీవ్యాఖ్య | రామోరా | రావి కృష్ణకుమారి | 15-08-2015 |
| | ధనుంజయ నిఘంటుః | పీఠిక | వుయ్యూరు లక్ష్మీనరసింహారావు | రావి మోహనరావు | 26-08-2015 |
| | వివాహసంస్కారము | - | - | శ్రీలలితానందాశ్రమం | 05-09-2015 |
| | శ్రీపరశంభుమహిమ్నఃస్తోత్రమ్ 2nd Edition | శివప్రియావ్యాఖ్య | దోర్బల విశ్వనాథశర్మ | రావి కృష్ణకుమారి | 05-09-2015 |
| | ముక్తిద్వారాస్తవ రత్నరాజము- | (ముల్గుపాపయ) ఉద్ఘాటినీవ్యాఖ్య | మేళ్ళచెర్వు | రావి మోహనరావు | 22-10-2015 |
| | వేదాంతముక్తావళీ - 2 | దినకరి అనువాదం | మేళ్ళచెర్వు | లలితానందాశ్రమం | 22-10-2015 |
| | ఆంధ్రకుమారసంభవం (సాంబశివకవి) | పీఠిక | గరిమెళ్ళ | పుష్పగిరి పీఠం | 22-10-2015 |
| | కుండలినీస్తవః (రుద్రయామళమ్) | టీకా | చింతగుంట సుబ్బారావు | రావి మోహనరావు | 22-10-2015 |
| | ఒకతేజోమయజ్వాల - శ్రీ అరవిందుల సావిత్రి | ఆంగ్లమూలానికి తెనుగు సేత | చింతగుంట సుబ్బారావు | రావి మోహనరావు | 05-12-2015 |
| | మేఘదూతం | మృణాళినీవ్యాఖ్య | - | రావి మోహనరావు | 15-12-2015 |
| * | అన్నమయ్యకౌముది | వ్యాఖ్య | డా॥తాడేపల్లి పతంజలి | రావి కృష్ణకుమారి మోహనరావు దంపతులు | 26-12-2015 |
| * | వివర్ణాదివిష్ణుసహస్రనామమ్ | సంస్కృతవ్యాఖ్యాసహితం | బెల్లంకొండరామరాయకవి | రావి మోహనరావు | ఫిబ్రవరి 2016 |
| * | భాగవతచమ్పూః | సంస్కృతవ్యాఖ్యాసహితం | బెల్లంకొండరామరాయకవి | రావి మోహనరావు | ఆగష్టు 2016 |



# అభినందన పద్యదశకము

కll శ్రీవాగ్దేవీశుభపద
సేవాసక్తహృదయాబ్జ! శివకరకార్యా!
శ్రీవిద్యామార్గానుగ!
భూవిద్వద్వినుత! రావి మోహనరాయా! 1

తే॥గీ॥ సంస్కృతాంధ్రభాషాగ్రంథసంతతులకు
నవ్యముద్రణగౌరవభవ్యగతులు
కలుగఁజేయుచు నున్నావు పలువిధాల
సారసారస్వతవరివస్య యిది మిత్ర! 2

ఉ॥ పండితమండలిన్ గలసి, భద్రకృతుల్ గణియించి, వారిచే
మెండుగ వ్రాయఁజేసి కడు మేలగు వ్యాఖ్యలు, వాని నచ్చులో
నిండుమనమ్ముతోడ నిల నిల్పిన శ్రామికనేత వీవు స
త్పండితవంద్య! నీయశము భవ్యము నవ్యము రావి మోహనా! 3

చ॥ స్వయముగ నీవు కొన్నిటికి వ్యాఖ్యలు వ్రాసి, ధనవ్యయమ్ము నో
ర్చి, యతులితశ్రమమ్మునకుఁ జిత్తమునందుఁ జలింపకుండ ని
ల్చి, యఖిలపాఠకుల్ ముదముచెందెడిరీతిని నచ్చువేసి, మం
చియశముఁ దాల్చుచుంటివి విశిష్టవిధానవిధేయ! మోహనా! 4

సీ॥ వేదాంతసద్గ్రంథవిశ్రుతశ్రేణికిన్
వెలుఁగు లిచ్చితి వీవు వేనవేలు
కమనీయగుణపూర్ణకావ్యవనాలకున్
నవజీవనము నిచ్చినావు మేలు
స్తోత్రరత్నాలకున్ శుభటీక లిప్పించి
జగతి కిచ్చితి వీవు సరసగతులఁ
గోరినరీతిలోఁ గోశరాసుల నహా!
పంచినావు కదా! ప్రపంచమునకు

గీ॥ రావి వంశాబ్ధిచంద్రమా! రమ్యహృదయ!
ప్రథితగుణగేయ! మోహనరాయనామ!
నీయశశ్చంద్రికావళుల్ నిఖిలదిశల
సాగుచున్నవి వాగ్దేవి సంతసింప. 5

ఉ॥ నీవలె భారతిన్ గొలుచునిర్మలభక్తులు తెన్గునేలపై
నీవిపరీతనాగరికహేలలవేళను నల్గురైదుగుర్
భావనచేయ నుందు రని పల్కెదc, బల్వురు మాత్ర ముండ రో
పావనవాఙ్మయాధ్వరశుభంకర! సంస్కృతసాహితీపరా! 6

క॥ భూగర్భశాస్త్రి వగు నిను
వాగర్థసమర్చనమును వ్రతముగc దాల్పన్
ఏ గురువులు శాసించిరొ?
బాగిది బాగిద్ది రావివంశాబ్ధిశశీ! 7

తే॥గీ॥ అమరభాషలోc గలనాల్గు వ్యాఖ్యలకును
దెలుcగున మృణాళినీవ్యాఖ్య దీర్చి చేర్చి
మేఘసందేశకావ్యమ్ము మేల్తరముగ
నాంధ్రజాతికి నిచ్చిన యాద్యుc డెవcడు?
రావి వంశాబ్ధిచంద్రమా! నీవు దక్క 8

క॥ సల్లలితకృతిని దీనిని
బుల్లెల శ్రీరామునకును బూజ్యున కిడుటల్
చెల్లును బెల్లుగ నౌచి
త్యోల్లాసవిరాజమానముత్తమహృదయా! 9

ఉ॥ ఇరువదిమూcడు వత్సరము లేగెను మోహన! నీవు గ్రంథముల్
సురుచిరపద్ధతిన్ విబుధశూరుల కిచ్చెడి యజ్ఞమందహో!
వరుసగ నూటముప్పదియుc బైని గణింపcగ నాఱు గ్రంథముల్
కరములయందు నిల్చెను జగమ్మునc గ్రొత్తవి నేcటివారికిన్. 10

సారస్వతమిత్రుcడు

**డా॥ వుయ్యూరు లక్ష్మీనరసింహారావు**
చరవాణి : 9573884352




ప్రకాశికా
రావి కృష్ణకుమారీ
404, జంజనం కాంప్లెక్స్,
చీరాల - 523155

